॥ श्रीश्रीगौरहरिर्जयति ॥

गौड़ीयग्रन्थगौरवः—

प्रकाशितग्रंथसंख्या—१११

( लघु )

# श्रीश्रीनारायणभट्टचरितामृतम्

तदनुगतेन केनचित् विरचितम्

सम्बत्—२०२०
मूल्यम्— २५ नये पैसे

प्रकाशकः व मुद्रकः—
कृष्णदासबाबा

गौरहरिप्रेस, कुसुमसरोवर

श्रीकृष्णः कमलायतेक्षण इहामुत्र प्रियानन्ददः
मेघश्यामवपुः स्वभक्तसुमुखो राधापतिः सुन्दरः ।
केयूरावृतकर्णशोभितमुखः पीताम्बरो वेणुभृत्
बर्हापीडधरो व्रजेशतनयः कुर्य्याच्छुभं शिवः ॥१॥
आनन्दरूपो व्रजभूमिदेवः सदा बिहारी व्रजवल्लवीषु ।
प्रेयः प्रियाप्राणधरः प्रशंसी कुर्य्याच्छुभं शिव एष कृष्णः॥२॥
श्रीमन्नारायणभट्टगोस्वामिने नमो नमः श्रीरेवतीरमणो
जयतितराम् ।

# अथ नारायणभट्टचरितामृतम्

रेवत्या सहितं देवं बलरूपगुणान्वितम् ।
भक्तपालं शरण्यं च नमामि श्रीहलायुधम् ॥१॥
श्रीमद्दक्षिणदिक्षु निवृतिवरे तैलङ्गसंज्ञान्विते
गोदानीरवहातटे शुभकरी पूः पुष्कली राजते ।
तस्यां शास्त्रविशारदो द्विजमुखः श्रीभैरवो दीक्षितः
प्रोवास श्रुतिशास्त्रधर्मनिरतः श्रीरंगनाथस्ततः ॥
श्रीरंगनाथादजनीह भास्करो
भाष्यं स निर्माय दिवाकरो परः ।
श्रीकृष्णाज्ञया द्वौ प्रवरौ सुतौ ततः
विद्यार्णवौ वैष्णवधर्म्मवृत्ती ॥२॥
नारायणो लघुपुत्रः गोपालश्च बृहत्सुतः ।
आयुष्मान्वरजो विप्रः गुणैर्वृद्धो महासुधी ॥३॥
यदा पंचमाब्दे मुकुन्दं ददर्श
इदं वक्ष्यमाणं वदं तं वचो हि ।
ऋषिर्नारदोऽसि प्रजातो मनस्वी
ममाज्ञां कुरुष्व व्रजस्फुर्त्तये त्वम् ॥४॥

आज्ञाप्त: प्रभुणेति भो मुनिवर त्वं याहि नंदव्रजं
रासोल्लासविलासधामसहितं ग्रामादिमुद्दीपय ।
उच्छिन्नं वहुकालकर्म्मवसत: स्थानं मदीयं निजं
श्रीवाराहपुराणोक्तबहुमतमालोक्य सर्व्वं कुरु ॥५॥
वृन्दाबनगतं त्वाहं पुनर्दास्यामि दर्शनं ।
कामगोपालमूर्त्यां सुकृतार्थस्त्वं भविष्यसि ॥६॥
इत्याज्ञां प्रणिधाय चात्मसदनात्काशीपुरीमागत:
तत्राधीत्य समस्तशास्त्रपटलं सर्वान्जनान्रंजयन् ।
ध्यायन्कृष्णपदाम्बुजं हरिकथां गायन् विवेश व्रजं
तत्र श्रीमथुरा सुरेश्वरजनिस्तस्यामुवास द्विज: ॥७॥
तत्रत्या व्रजवासिनो वुधजना: सेवां परांचक्रिरे
तेनासौ मथुरास्थ इत्यपि पदं लेभे परं सुन्दरं ।
पंचाशत्प्रमितान्द्वयाधिकतरां ग्रन्थान्मुदा निर्ममे
ते सर्वे विदुषां सभासु नितरां प्रपाठ्यमाना: सदा ॥८॥
वृन्दाबने पुन्यलताद्रुमाश्रये मनोहरे कृष्णविलासभूमौ
कलिन्दजावारितरङ्गचर्च्चिते विराजते मन्मथमोहन: स्वयम्॥९॥
तन्मन्दिरे भट्टनारायणो गत: तद्दर्शनोत्कंठ्यमाना मनस्वी ।
स्मरन्मुदा कृष्णवच: पुरेरितं उवाच मे दर्शय दर्शनं प्रभो॥१०
तदा कृष्णदासो बभाषे बचोद:
अरे बालक त्वं हठं मा कुरुष्व ।
महाराजभोगनीराजनान्ते
न कस्यापि दर्शो भवेदन्यकाले ॥११॥
इत्युक्त्वा कृष्णदासस्तु पाकशालां गतोऽभवत् ।
ततो नारायणो भट्टो पश्चात्तापं महद्गत: ॥१२॥
अश्रुधारां मुमोचाथ भूयो भूयो रूरोद ह ।
ईश्वरोऽप्यनृतं बक्ति मनुष्याणां तु का कथा ॥१३॥

एवं विलपतस्तस्य कपाटं मन्दिरस्य वै ।
स्वयं व्यवर्ज्जितो काले सर्वेषां पश्यतां नृणाम् ॥१४॥
ततः श्रीकृष्णमूर्त्तिस्तु स्वर्णसिंहासनादधः ।
आगत्य दर्शनं दत्त्वा उत्तमांगे दधत्करम् ॥१५॥
गौड़ेश्वरः श्रीयुतकृष्णदासः श्रुत्वा चरित्रं बहिरागतोऽसौ ।
कस्त्वं महाभाग कृतार्थ एव तथापि वृत्तं कथनीयमाशु ॥१६॥

पश्चादात्मवृत्तान्तं तु कथयामास पूर्वतः ।
ब्रह्मचारिसखा भूत्वा उच्चग्रामाभिधं गतः ॥१७॥
देहकुण्डमपि पापकृन्तनं चिक्कणीबरशिला च राजते ।
रासमण्डलमुदारमद्भुतं यत्र कूपमधिकं सखीकृतम् ॥१८॥

यानि स्थितानि भगवच्चरणादिचिन्हा-
न्याधिश्रितानि सदनानि च मण्डलानि ।
श्रीव्रजनाभकृतमूर्त्तिकदम्बकानि
कृत्स्नानि तानि स सुधीः प्रकटीचकार ॥१९॥

विष्णोश्च मूर्त्तिः शिवलिंगकानि रासोत्सवान् सबिलासयुतान् ।
दानस्य लीलां अथ मानलीलां श्रीबाललीलां पुनरुद्धधार॥२०॥
एवं निवसतस्तस्य स्वप्नकाले महाप्रभुः ।
आत्मानं दर्शयामास बक्ष्माणं बचो वदन् ॥२१॥

मदीयमहामूर्त्तिरस्त्यत्र साधो
शिलापृष्ठिरत्याद्भुता गौरबर्णा ।
अधो हिंसबृक्षस्य भूमौ प्रबिष्टा
महाशेषमूर्द्धा हि कंजप्रदेशा ॥२२॥
शुभा रेवतीसंयुतारिष्टहन्त्री
फणैः सप्त सप्त प्रमाणैर्प्रदिष्टा ।
त्वमाशु क्षितौ तां प्रसिद्धां कुरुष्व
सदा त्वत्कुले शं विधास्यत्यमोघम् ॥२३॥

सुस्वप्नं पश्यतस्तस्य मनः संभ्रमतां ययौ ।
कथं निस्तारयामीमां बहुबिस्तारशंकया ॥२४॥
तदैवाभून्नभोबाणी शंकां मा कुरु सुव्रत ।
स पादहस्तप्रमिता मूर्तिः सैव भविष्यति ॥२५॥
एवमुक्तो भगवता नारायणः वृहद्गुणः ।
वासुदेवं हृदि ध्यात्वा धरां शुद्धामचीखनत् ॥२६॥
हस्त सप्त मिता भूमिः खनिता सा यदा भवत् ।
मूर्तिं ददर्श स मुनिर्माधुर्य्यादिगुणान्विताम् ॥२७॥
मूर्त्तिनिष्कासनं कृत्वा स्वकुटयां स्थापयन्मुनिः ।
सुलग्ने सुदिने प्राप्ते वेदवेदान्तपारगैः ॥२८॥
दक्षैः मन्त्रकोबिदैश्च निस्पृहैरनलोलुपैः ।
ब्राह्मणै वैदमन्त्रेणाभिषेचनमकारयत् ॥२९॥

मुनिचरितं श्रुतिविषये श्रुत्वा दिल्लीपतिः शुभं नितरां ।
हयगजशिविकारूढः सामात्योऽकब्वरः प्राप ॥२९॥
करकमले खलु बध्वा स्थित्वा श्रीमन्मुनेः मुदा पुरतः ।
आज्ञां देहि यदिच्छसि सोऽहं ते पूरयिष्यामीच्छितं । ॥३१॥
मम वांछांकुरो नास्ति धनादिषु महामते ।
कृष्णपादाब्जसेवायां बांछा मे नान्यबस्तुषु ॥३२॥
इत्युक्तो नृपतिः प्रसन्नहृदयः सर्वाधिपः सर्वदः
स्वामात्ये दृशमर्पयन् जनसभामध्ये स्थितः प्रेमतः ।
राजंष्टोडरमल्ल मन्दिरबरं कुर्वित्युवाच त्वरं
तन्निर्वाहकरं परं बहुधनं देयं त्वयाज्ञा मम ॥३३॥
इत्युक्त्वा नृपतिस्तदा कृपणवद्दासोऽस्म्यहं ते मुने
आज्ञां देहि त्वमद्य बाञ्छितमपि कुर्वित्युवाच स्वयम् ।
भो त्वादृक् न मया निरीक्षित अहो स्वात्मानन्दः शास्त्रवित्
त्वं साक्षाद्भगवान्नृषिः समभवत्कृष्णाज्ञया भूतले ॥३४॥

तेनाज्ञप्तोऽकब्बरोऽसौ गतो दिल्लीं महायशा ।
राजा टोडरमल्लस्तु कारयामास मन्दिरम् ।।३५।।
एकाप्सरा शापवशाद्दिवि च्युता पुनर्व्रजे गुर्ज्जरगेहजाता ।
कर्त्तुं परं सेवनमत्युदारा नारायणस्याश्रममाजगाम ।।३६।।
दृष्ट्वा तं मुनिशार्दूलं प्रणम्याह पुनः पुनः ।
मन्त्रं देहि महाराज सर्वकामफलप्रदम् ।।३७।।
अद्य प्रभृति भो स्वामिन्भविष्यन्ति प्रजा मम ।
ते सर्वे तव शिष्यत्वमाप्स्यंति यदि मत्पराः ।।३८।।
दधिदुग्धादिभिः सेवां करिष्यन्ति सदैव हि ।
इति प्रसाद्य तमलं मन्त्रं लेभे च वैष्णवम् ।।३९।।
एकदावस्थितं मौनमास्थितं मुनिसत्तमं ।
प्रणम्याह कथं स्वामिन् उदासीनतया स्थितः ।।४०।।
तयेत्युक्तो तदा प्राह कृपयाप्सरसं मुनिः ।
संकेतस्थलमत्राभिविस्मृतं ह्युत्तमं मया ।।४१।।
तदा तु विस्मृता प्राह जानामि तमहं विभो ।
गच्छ गच्छ मया साकमहो वच्मि तवाग्रतः ।।४२।।
तया सार्द्धं ततो गत्वा दृष्ट्वा तं तन्निवेदितम् ।
श्रीमन्नारायणो भट्टस्तथैवामुं समुद्धरत् ।।४३।।
एकोऽनपत्योऽपि महादरिद्री जात्याग्रजो वैश्य इति प्रसिद्धः ।
स लालदासो भगवत्प्रियस्य नारायणस्याश्रममाजगाम ।।४४।।
बध्वा करे तत्पुरतः स्थितोऽह्यसौ
प्रणम्य न्यामंत्र्य मुनिं पुनः पुनः ।
प्रदेहि मन्त्रं मम वाञ्छितार्थदं
दासोऽस्म्यहं ते मुनिवर्य्य साम्प्रतम् ।।४५।।
ततः प्रसन्नहृदयः मन्त्रं दत्वा महाप्रभुः ।
वरं च प्रददौ तस्मै परं सन्ततिदायकम ।।४६।।

अद्यापि वर्त्तते तत्र तद्वंशो बहुबिस्तरात ।
कृष्णाक्रीड़े ब्रजेऽन्यत्र गुरुभक्तिपरायणः ॥४७॥
कश्चिद्द्विजबरो धीमान भट्टशिष्योऽभवत्तदा ।
वृषभानुपुरेऽद्यापि संततेस्तस्य बिस्तरः ॥४८॥
तस्मै गुरुः प्रददौ कृपया निजां स्वां
मूर्तिश्रियंस्तु नितरां वृषभानुजायाः ।
तां प्राप्य स द्विजबरो परदेबतां वै
मन्ये कृतार्थतममात्मनि देहबन्धम् ॥४९॥

तदा प्रभृति बिप्रोऽसौ गुरुणा करुणात्मना ।
दत्तं स्वामिपदं प्राप्य तत्सेवनरतोऽभवत् ॥५०॥
नारायणाभिधस्यास्य द्विजस्य सदृशो भुवि ।
प्रेमी गुरौ प्रीतिमांश्च न भूतो न भविष्यति ॥५१॥
राधाकृपाकटाक्षेण श्रीगुरौ चातिभक्तितः ।
तद्वंशोऽद्यापि नितरां वर्त्तते सर्वतोपरि ॥५२॥

पुनरेको द्विजः प्राप्तो भट्टनारायणाश्रमम् ।
मन्त्रं गृहीत्वा तं प्राह आज्ञां देहि मम प्रभो ॥५३॥
प्रसन्नो भगबानाह मदुक्तं कुरु पुत्रक ! ।
राधाकृष्णविहाराणि त्वया कार्य्याणि निश्चितं ॥५४॥

इत्युक्त्वा मुकुटं दत्वा करल्लपुरबासिनम् ।
कृष्णलीलाबिहाराणि कारयामास वै मुनिः ॥५५॥
अद्यापि ब्रजभूमौ ते गुरोः स्वामिपदं गताः ।
तद्वंश्यास्तत्र स्थानेषु कृष्णलीलाः रचन्ति वै ॥५६॥

ताः संप्रवीक्ष्य दिवि देवगणार्थसिद्धाः
गन्धर्व्वकिन्नरगणास्सुबिमानसंस्थाः ।
हर्षं गताश्च मुनयो भुवि मानवाद्याः
मुञ्चन्ति गद्गद्गिरस्सुमनोऽश्रु धाराः ॥५७॥

एकदा श्रीमदाचारी स्वेष्टदेवाग्रतः स्थितः ।
तदैवागतबानेकः बाढ़ोढ़ाभिधसंज्ञितः ॥५८॥
बध्वा करपुटे शिष्योऽभवद्दासः नारायणः ।
गुरुसेबारतो नित्यं गुरावेवतु वस्तुदृक् ॥५६॥
गुरुसेवाप्रभावेण तस्यासन् चतुराश्रमाः ।
तेष्वद्यापि वसंतो वै साधवः कृष्णतत्पराः ॥६०॥

जयं कुर्व्वन्ति तस्य वै माध्वचारिमतानुगाः ।
तेषां दर्शनमात्रेण शुद्धो भवति मानबः ॥६१॥
तदैव द्वादश मिताः शिष्याः जाताः महात्मनः ।
ब्राह्मणाः परमस्निग्धाः यत्र कुत्र निबासिनः ॥ ६२

अष्टौ स्वामिपदं प्राप्ता श्रीगुरोः कृपया पुनः ।
शेषाः मिश्रपदं याता एको दासपदं गतः ॥ ६३
श्रीमत्स्वेष्टगुरोः कृपामधिगता शीलादिसंभूषिता
शास्त्रभ्यासरतास्सदैवबिमला आज्ञानुकूला गुरोः ।
तेषां दर्शनतो भवन्सुकृतिनोऽनेका कृतार्थीकृताः
श्रीनारायणभट्टदेवकृपया सर्वे महत्वं गताः ॥६४॥

तेषां संततिबिस्तारो वर्त्ततेऽद्यापि भूतले ।
तद्वंशशिष्यास्ते सन्ति सर्वे बिद्योपजीबिनः ॥६५॥
राजासीद्राष्ट्रदेशे तु दुर्गे वै पिचुसंदके ।
साधुसेवी सदाचारी सद्बुद्धिस्सत्यतत्परः ॥६६॥

चह्वान संज्ञकानां च क्षत्रियाणां तु पीठभृत् ।
स्वधर्मनिरतो राजा स्वप्रजापालने रतः ॥६७॥
तस्य राज्ये प्रजाः सर्बा अभ्यनन्दन्सदैव हि ।
परं तु सोऽनपत्योभूत केनचित्कर्मणा नृपः ॥६८॥
उपायैर्बहुभिः राजा न लेभे स्वप्रजां यदा ।
प्रजाशयान्निबृतोऽभूत्तदा नृपतिसत्तमः ॥६६॥

अथैकदा नृपाग्रे तु साधुरेकः समागतः ।
उवाच नृपमासीनं मन्त्रिभिः परिवारतः ॥७०॥
राजंस्त्वां लक्षयेऽहं वै उदासीनतया स्थितं ।
वद मे राजशार्दूल स्वस्य दुःखस्य कारणम् ॥७१॥

तदा तु नृपतिः प्राह सुखं सर्वं ममेप्सितम् ।
परं तु सन्ततिर्नास्ति तदुपायं वदस्व मे ॥७२॥
नृपवाक्यं ततः श्रुत्वा साधुः प्रोवाच सादरम् ।
अधुना त्वं व्रजे गच्छ भट्टनारायणाश्रमम् ॥७३॥
तं गत्वा मुनिशार्दूलं शिरसानम्य पादयोः ।
स्ववृत्तं पुनरावेद्य कृतार्थस्त्वं भविष्यसि ॥७४॥
इतीरितं साधुवरेण राजा श्रुत्वा तदन्तः पुरमाजगाम ।
राज्ञ्यै तु सर्वं कथयाम्बभूव निशम्य सा हृष्टतरा बभूव ॥७५॥

पत्न्याभिप्रायमानीय स राजा वहिरागतः ।
पीठे स्थित्वा स्वमन्त्रिभ्य आज्ञामेतां ददौ नृपः ॥७६॥
परश्वोऽहनि भो मन्त्रिन् गमिष्यामः व्रजं वयम् ।
इति मन्त्रिवरं प्राच्य सैनियानाज्ञयत्प्रभुः ॥७७
द्विजानाहूय धर्मज्ञो तदाज्ञां प्राप्य भूपतिः ।
सुमुहूर्त्ते व्रजे गन्तुं प्रस्थानमकरोन्नृपः ॥७८॥
गजं समारूहद्राजा सभार्य्यो मोदमास्थितः ।
द्विजान्संपूज्य विधिवत्स्वसैन्यपरिवारतः ॥७९॥

त्रिदिनाभ्यन्तरे राजा व्रजमागतवान् त्वरं ।
उच्चग्रामे शीरपाणिमन्दिरं च ददर्श ह ॥८०॥
दृष्ट्वा संकर्षणं देवं निवेद्योपायनं बहु ।
चतुः प्रदक्षिणं कृत्वा ननाम सिरसा भुवि ॥८१॥
तत्रैव ग्रंथिं संबध्वा पत्न्या सह महामतिः ।
मुनेः संदर्शनार्थाय तदन्तिकमथागमत् ॥८२॥

दृष्ट्वा मुनीशं निजलाभपूर्ण—
मतीव हर्षं समवाप राजा ।
पादौ गृहीत्वा पुनरित्युवाच
प्रदेहि मे वाञ्छितदं सुमन्त्रम् ॥८३॥
मुनीशोऽपि तदा ज्ञात्वा पुत्रकामोऽयमागतः ।
तमुवाच क्षणं ध्यात्वा स्वेष्टदेवं हि हृद्गतम् ॥८४॥
राजंस्त्वं पुत्रकामोऽसि मत्साम्निध्यं त्वमागतः ।
गृहाण मन्त्रं सुखदं पुत्रस्ते संभविष्यति ॥८५॥
इत्युक्त्वान्तिकमाहूय राजानं भक्तवत्सलः ।
गोपालमन्त्रं प्रददौ श्रुतौ दक्षिणके शुभे ॥८६॥
राजा तमर्हयांचक्रे पाद्यार्घ्याचमनादिभिः ।
भवत्कृपा-कटाक्षेण सफलो मे मनोरथः ॥८७॥
अद्य मे सफलं जन्म भवद्भिः पावितं कुलं ।
आज्ञां देहि महाराज स्वदेशं प्रव्रजाम्यहम् ॥८८॥
तेनाज्ञप्तस्तदा राजा आजगाम पुरं स्वकम् ।
द्विमासाभ्यन्तरे राज्ञी कुमारं शुश्रुवे शुभम् ॥८९॥
अद्यापि वर्त्तते तस्य वंशो वै बहुविस्तृतः ।
वैष्णवो गुरुभक्तश्च श्रेष्ठमार्गरतस्सदा ॥९०॥
तत्पीठेऽद्यापि नाम्नैव भीमसिंहो विराजते ।
धार्मिकः सत्यवक्ता च तदैवाभून्नृपोऽन्येऽपि ॥९१॥
शिष्यो वै पट्टनाधिपो परोऽपि नृपतिश्चासीत् ।
एवं बहवो शिष्याश्च प्रशिष्याः वै मुनेरासन् ॥९२॥
एकदा द्विजवरः सुजितात्मा स्वेष्टदेवं करुणामृतपुष्टः ।
प्राप्तवानपि विचारमशेषेणात्मना हृदि विचिन्तयतीत्थम् ॥९३॥
न निर्वहति श्रीपूजा राजसी स्वेष्टदैविकी ।
कथं कार्या मया त्वद्य विना वंशपरम्पराम् ॥९४॥

गत्वा स्वदेश वपासस्व षोडश
सुज्ञातिकन्यां समुवाह मन्त्रतः ।
तस्यां स्वयं कृष्णकृपाबलान्वितो
ह्यु त्पादयामास सुतं गुणाकरम् ।।६५।।
ततोप मम पृथ्वीगते
दृष्टे तीर्थान्यायतानि च ।
प्रदक्षिणां कृता शीघ्रे पुनः
गत्वा स्वदेशे वयसि षोडशः ।।६६।।
आर्यपुत्रमृते कोऽपि स्वेष्टदेवार्चने पुनः ।
मम सिंहासनें स्थातुमन्यो नार्हति निश्चितम् ।।६६।।
इति निश्चीय मनसा स्वेष्टदेवाग्रतः स्थितः ।
स्वबिचारितमावेद्य तदाज्ञामाप्तवान्मुनिः ।।६८।।
दामोदराख्यं नवकञ्जलोचनं प्रलम्बबाहुं नरलोकसुन्दरम् ।
समस्तशास्त्रार्थबिलोडने रतमालिख्य पत्रं मुनिराजुहाव तम्।।६६
तत्पत्रमालोच्य मुनीशप्रेरितं
गोपालसूनुः पितरं समर्प्य च ।
तदाज्ञया श्रेष्ठमतिः पितुः पुरात्
प्रस्थानमाशु स्वव्रजे तदाऽकरोत् ।।१००
बहुदेशान्समुल्लंघ्य रथेनानिलरंहसा ।
लघुनैव हि कालेन स्वदेशाद्व्रजमागतः ।।१०१
दृष्ट्वा दामोदरं देबं सर्वे ते व्रजबासिनः ।
पुष्पोपहारैः संपूज्य मार्गे हर्षमुपागमन् ।।१०२।।
तत्रोच्चग्राममागत्य श्रीमद्भट्टनारायणम् ।
शिरसा बन्दयाञ्चक्रे पितृव्यसन्मुखे स्थितः ।।१०३।।
दृष्ट्वा मुनीशोऽपि तदार्य्यपुत्रं
गुणान्वितं षोडशवार्षिकं बरम् ।

अतीव हर्षं समुपागतोऽसौ
तं स्वांक आरोप्य शिरस्यधात्करम् ॥१०४॥
ममाज्ञा पालिता पुत्र ! सुपुत्रेण त्वया यथा ।
पुनर्ददाम्यहं त्वाद्य तामाज्ञां कुरु सुव्रत ॥१०५॥

बिबाहं कुरु शीघ्रं त्वं देशं गत्वा महामते ।
पुनरागत्य पीठस्थो स्वेष्टसेबारतो भव ॥१०६॥
आज्ञप्तो मुनिनैवमाशु सदनं प्रागात्स्वपित्रोस्तदा ।
कृत्वोद्वाहमथ त्वरं हि बिधिना दामोदराख्यः स्वयम् ॥१०७॥
पृष्टो स्वं पितरं च मातर मपि वृद्धान्नमस्कृत्य च ।
तत्पश्चात्पुनरागतो व्रजभुबि श्रीमन्मुनेरन्तिकम् ॥१०८॥

ननाम मुनिपादाब्जं शिरसा पतितो भुबि ।
सभार्य्यो तमुबाचाथ आज्ञां देहि मम प्रभो ॥१०९॥
ऋषिस्तमाह भो बत्स त्वया मे पालितो बचः ।
अद्य त्वं पीठमातिष्ठ मदीयं कृपयाददं ॥११०॥
शुभे मुहूर्त्ते शुभयोगयोगे
ज्योतिर्विदां श्रेष्ठतमे प्रसिद्धे ।
भाद्रे सितैकादशि जीबसंयुते
पीठाभिषेकं समकारयन्मुनिः ॥१११॥
तदा महोत्सवो नृणां व्रजे भवदहर्निशं ।
शंखभेरीमृदङ्गाणां स शब्दस्तुमुलोभवत् ॥११२॥

मुनिशिष्यप्रशिष्याद्या सर्वे बलिमुपाहरन् ।
गोपीनां गीतशब्दानामभूच्छब्दो महोत्सवे ॥११३॥
संकर्षणाग्रे तं बालं नीत्वा शीघ्रं महामुनिः ।
नमयित्वा च साष्टांगं स्वयं हि प्रणनाम सः ॥११४॥
ध्यानं कृत्वा क्षणार्द्धं तु स्तुत्वा संस्तबनैः पुनः ।
बध्वांजलिरुपामंत्र्य इदं प्रार्थितबानसौ ॥११५॥

श्रीरेवतीरमण एष कृपाकटाक्ष-
व्याक्षेपणेन त्वयकानिशमेव रक्ष ।
त्वत्सेवनार्थमिह चागतवान्स्वदेशा-
द्बालोऽयमद्य भवता दययाभिपाल्यः ॥११६॥
इत्युक्त्वा चरणौ स्पृष्ट्वा प्रणम्य च पुनः पुनः ।
स्वाभिप्रायं निवेद्याशु सिद्धार्थोऽइसमन्यत ॥११७॥
भाद्रे मासि सिते पक्षे द्वादश्यां सौम्यवासरे।
श्रीमन्नारायणो भट्टः विष्णुलोकं गतोऽभवत् ॥११८॥
यो वै गर्भगताय भक्तमणये प्रल्हादनाम्नेऽपि च
ज्ञानं भक्तिविधायकं हरिपरं प्रादाद्सुदृढं मुदा ।
येनोत्तानपदि ध्रुवाय नितरां भक्तिर्दृढा तानि सत्
सोऽयं भट्टनारायणः प्रकटितः कृष्णाज्ञया भूतले ॥११६॥
य इदं पठते लोके चरित्रं परमाद्भुतं ।
वैष्णवः सत्यवक्ता च तस्य लक्ष्मी सदा स्थिता ॥१२०॥
इति श्रीमन्नारायणभट्टगोस्वामिनो दक्षिणदेशा-
द्व्रजागमनं तच्चरितं च पूर्त्तिमगात् ।
सं० १६२८ नीमराणामध्ये कीनी नकल ॥